श्रीविश्वनाथपञ्चाननभट्टाचार्यप्रणीता

# कारिकावली

## ( THE KĀRIKĀVALĪ )

सिद्धान्तमुक्तावलीसहिता

विषमस्थलटिप्पणीसंवलिता च ।



१९५२



निर्णयसागरमुद्रणालयम्, मुंबई २

श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचिता

# का रि का व ली

# ( THE KĀRIKĀVALĪ )

## सिद्धान्तमुक्तावलीसमेता

विषमस्थलटिप्पणीसमलंकृता च

•

श्रीमदिन्दिराकान्ततीर्थचरणान्तेवासिभिः

**नारायण राम आचार्य "काव्यतीर्थ"**

इत्येतैः संशोधिता

•

नवमं संस्करणम् : १९५२



निर्णयसागर प्रेस, मुंबई २

मूल्यम् १। रूप्यकः



# भूमिका.

ॐ नमः श्री ६ गुरुचरणारविन्दाभ्याम् ।

इह खलु सर्वेऽपि तन्त्रकारा अभिमतप्रमेयसमर्थनाय तदर्थं परमतनिरासाय च प्रमाणमाश्रयन्ते परीक्षन्ते च, इति प्रमाणतत्परीक्षाप्रकारज्ञानमावश्यकं शास्त्रमधिजिगांसूनाम्। परीक्षणं चात्र प्रमाणस्य गुणदोषविमर्शः। तच्च तर्कशास्त्रापरपर्यायप्रमाणशास्त्राध्ययनसाध्यम्। अत एवास्य शास्त्रस्य सर्वशास्त्रप्रदीपत्वमाचक्षते वृद्धाः—'प्रदीपः सर्वशास्त्राणामुपायः सर्वकर्मणाम्। आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता' इति। प्रकीर्तितेति स्त्रीत्वमान्वीक्षिक्यपेक्षया। गणितशास्त्रेऽपि प्रतिज्ञादिन्यायावयवोपन्यासपुरःसरमुपनिबद्धेषु धर्मशास्त्रादिष्विवास्य सुमहानुपयोगः। अभिहितं हि पाट्यां सर्वस्यापि गणितजातस्य त्रैराशिकात्मकत्वं श्रीभास्कराचार्यैः—'यथा भगवता भक्तजनमनःक्लेशापहारिणा हरिणा निखिलजगज्जननैकबीजेन सकलभुवनभवनवनगिरिसरिदसुरसुरनरनगरादिभिः स्वभेदैरिदं जगद्व्याप्तं तथेदमखिलं गणितजातं त्रैराशिकेन व्याप्तम्' इति। त्रैराशिकं च प्रमाणगणितमित्युच्यते। तच्चानुमानरूपम्। तथा हि—एकेन पणेन पञ्च फलानि क्रीणाति त्रिभिः पणैः कियन्ति क्रीणीयादिति पृष्टः एकेन पञ्च क्रीणातीति वाक्यादेकपणत्वं फलपञ्चकमूल्यत्वव्याप्यमिति व्याप्तिं गृह्णाति। ततश्च 'मूल्यक्रयतावच्छेदकभावापन्नयोर्ययोः संख्ययोः व्याप्यव्यापकतावच्छेदकभावः समानसंख्यागुणितयोस्तयोरपि तथा' इति नियमसाचिव्येन त्रित्वविशिष्टपणत्वे पञ्चदशफलमूल्यत्वव्याप्तिं गृहीत्वा पणत्रयं पक्षीकृत्य त्रित्वविशिष्टपणत्वेन लिङ्गेन पञ्चदशफलमूल्यत्वमनुमिनोतीत्यकामेनाप्यभ्यु-

पगन्तव्यमस्य प्रमाणशास्त्रस्य सर्वशास्त्रप्रदीपत्वम् । तदेतादृशं सर्वशास्त्रप्रदीपभूतमान्वीक्षिक्यपरपर्यायं प्रमाणशास्त्रं भगवानक्षपादः प्रणिनाय । प्रणिनाय च भगवान्कणादोऽपि यद्वैशेषिकदर्शनमित्युच्यते । आंशिकविरोधवतोरप्यनयोर्भूयसीं सरूपतामवलोक्य श्रीमहामहोपाध्यायैर्गङ्गेशोपाध्यायैः समावेशितोभयरहस्यस्तत्त्वचिन्तामणिर्नामाप्रतिरूपः संदर्भः प्राणायि । स चाधुना रघुनाथशिरोमणिप्रणीतदीधितिव्याख्यानैरतिगहनैः सूक्ष्मधियामप्यगोचरः साधारणधियां पुनरतिभीषणः संवृत्त इति तदध्येतॄणां बालानामुपचिकीर्षया विद्वद्भिर्भूयांसि प्रकरणानि प्रणीतान्यथापि कारिकावली सर्वेषु तेषु मूर्धाभिषिक्तेत्यविच्छिन्नतदध्ययनाध्यापनसंप्रदाय एव गमयतीति कृतं तद्गुणगणख्यापनायासेन । सा च सिद्धान्तमुक्तावलीसहिता दिनकरीरामरुद्रयादिग्रन्थान्तरसाहाय्येन संशोध्य न्यायसिद्धान्ताध्येतॄणामुपायनीकृतेति शम् ।

विदुषामनुचरः

वाक्रे इत्युपाह्वो महादेवशर्मा.



# विषयानुक्रमकोशः

श्रीः

# कारिकावली ॥

卐

नूतनजलधररुचये गोपवधूटीदुकूलचौराय । तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥ द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् । समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥ क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः । द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥ स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् । संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥ बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् । द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥ उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा । प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥ भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च । तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥ सामान्यं द्विविधं प्रोक्तं परं चापरमेव च । द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥ परभिन्ना तु या जातिः सैवापरतयोच्यते । द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥ व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च । अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥ घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥ अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः । प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥ एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते । सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥ द्रव्यादयः पञ्च भावा अनेके समवायिनः । सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥ सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः । पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥ अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता । कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥ समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् । एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥ यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् । तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥ येन सह पूर्वभावः कारणमादाय वा यस्य । अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥ जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते । अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥ एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् । घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥ तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः । पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥ समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् । गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते । क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥२४॥ क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥ कालखात्मदिशां सर्वगतत्वं परमं महत् । क्षित्यादिपञ्च भूतानि चत्वारि

स्पर्शवन्ति हि ॥२६॥ द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् । अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥ रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः । गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥ आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः । यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः । स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥ स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥ स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश । बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥ धर्माधर्मौ गुणा एत आत्मानः स्युश्चतुर्दश । संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥ संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे । परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥ तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता । षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः । नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥ अनित्या तु तदन्या स्यात्सैवावयवयोगिनी । सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥ योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् । विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥ नित्यतादि प्रथमवर्त्कि तु देहमयोनिजम् । इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥ उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् । नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥ इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः । अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥ ४२ ॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः । पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥ प्राणादिस्तु महावायुपर्यन्तो विषयो मतः । आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥ इन्द्रियं च भवेच्छ्रोत्रमेकः सन्नप्युपाधितः । जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥ परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः । दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥ उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् । आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥ शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् । धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥ प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः । अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०॥ विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे । घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः । तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥ उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥ क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः । गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि

च त्वचः। रूपान्यचक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥ द्रव्याध्यक्षं त्वचो योगो मनसा ज्ञानकारणम्। मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥ ज्ञानं यन्निर्विकल्पाख्यं तदातीन्द्रियमिष्यते। महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥ विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥ द्रव्येषु समवेतानां तथा तत्समवायतः। तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥ तद्वृत्तीनां समवेतसमवायेन तु ग्रहः। प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥ विशेषणतया तद्वदभावानां ग्रहो भवेत्। यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥ अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः। सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥ आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते। तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः। योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥ युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः। व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६॥ अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि। अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥ व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते। व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥ ६८ ॥ अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना। साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥ सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते। स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥ अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः। कालात्ययापदिष्टश्च हेत्वाभासस्तु पञ्चधा ॥ ७१ ॥ आद्यः साधारणस्तु स्यादसाधारणकोऽपरः। तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः। यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ॥ ७३ ॥ तथैवानुपसंहारी केवलान्वयिपक्षकः। यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥ आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ। व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५॥ पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः। ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥ व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्। विरुद्धयोः परामर्शो हेत्वोः सत्प्रतिपक्षता ॥७७॥ साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः। उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्। सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥ वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते। गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥ पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः। शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥ लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः। आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥ कारणं संनिधानं तु पदस्यासत्तिरुच्यते। पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥ यत्पदेन विना यस्याननुभावकता भवेत्। आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥ साक्षात्कारे सुखादीनां करणं मन उच्यते। अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः। रूपं

रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥ द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी। धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥ एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः। संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥ संयोगश्च विभागश्च संख्या द्वित्वादिकस्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः। बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः। संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥ गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः। संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥ एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः। बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥ ९३ ॥ अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः। अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥ अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्। स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः। संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥ स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके। भवेदसमवायित्वमथ वैशेषिके गुणे ॥९७॥ आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः। वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥ द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत्। वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥ चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम्। चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥ जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम्। रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥ सहकारी रसज्ञाया नित्यतादि च पूर्ववत्। घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥ सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः। स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥ अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः। काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥ एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित्। तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥ नैयायिकानां तु नये द्व्यणुकादावपीष्यते। गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥ नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते। द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥ अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः। अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥ अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते। परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥ अणु दीर्घं महद्ह्रस्वमिति तद्भेद ईरितः। अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥ संख्यातः परिमाणाच्च प्रचयादपि जायते। अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥ परिमाणं घटादौ तु परिमाणजमुच्यते। प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥ परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः। संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥ अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते। अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥ अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥ तथोभयक्रियाजन्यो भवेत्संयोग-

जोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥ मेषयोः संनिपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥ तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः । अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥ शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥ विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् । हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥ परत्वं चापरत्वं च द्विविधं परिकीर्तितम् । दैशिकं कालिकं चापि मूर्त एव तु दैशिकं ॥ १२१ ॥ परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् । अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥ तयोरसमवायी तु दिक्संयोगस्तदाश्रये । दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥ परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः । अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥ अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः । बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥ अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते । अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता । तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥ आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः । भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥ किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः । तदभावप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥ स संशयो मतिर्या स्यादेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥ दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥ प्रत्यक्षे तु विशेष्येण विशेषणवता समम् । संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥ १३२ ॥ पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् । शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥ शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा । गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥ अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् । तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥ प्रकारतादिशून्यं हि संबन्धानवगाहि तत् । प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥ व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा । हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥ साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा । स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥ सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः । हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥ व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् । शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥ अनुमानगतार्थत्वादिति वैशेषिकं मतम् । तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४१ ॥ द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः । अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ॥ १४२ ॥ साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते । व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥ सुखं तु जगतामेव काम्यं धर्मेण जायते । अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये

स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥ चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥ बलवद्विष्टहेतुत्वमितिः स्यात्प्रतिबन्धिका । तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥ द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् । प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥ एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् । चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥ उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् । निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनता धियः ॥ १५१ ॥ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् । शरीरे प्राणसंचारे कारणं परिकीर्तितः ॥ १५२ ॥ अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि । सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥ सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः । परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु । द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ । तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥ स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि । अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥ भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥ स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते । धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः । कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः । प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥ इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः । शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥ कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः । सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥ वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥ उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥ तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् । तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

॥ इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृता कारिकावली समाप्ता ॥

श्रीः

# कारिकावली

## सिद्धान्तमुक्तावलीसहिता ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नूतनेत्यादि । ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्, विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेत्,—न; अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां, संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते । इत्थं च यत्र

---

टिप्प०—१ अत्र भव्यायान्तेनैव वाक्यपरिसमाप्त्या लीलेत्यादिविशेषणान्वयार्थं विशेष्यस्यानुसंधानेऽपि न समाप्तपुनरात्तत्वम् । किमिति चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्याकाङ्क्षया निराकाङ्क्षा प्रतिपत्तिर्न संभवतीति लीलेत्यादिविशेषणानुक्तौ विवक्षितान्वयबोधाभावात् । नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेषणान्तरान्वयार्थं विशेष्यवाचकपदस्य पुनरनुसंधानस्यैव समाप्तपुनरात्तत्वात् । क्रियाकारकपदानां परस्पराकाङ्क्षा नियता, पुत्रादिपदानामपि प्रतियोग्याकाङ्क्षा नियता, एवं प्रयोजनाकाङ्क्षापि नियतैव; प्रयोजनाभावे वाक्यार्थस्यैवासिद्धिप्रसङ्गात् । नियताकाङ्क्षा=उत्थिताकाङ्क्षा । २ मुक्तावलीत्यनेन निर्दोषत्वं सूचितम् । अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । पदार्थतत्त्वावधारणं च प्रयोजनं सूचितम् । संबन्धश्च प्रतिपाद्यप्रतिपादकभावः । पदार्थतत्त्वावधारणकामः=अधिकारीति । ३ चरमवर्णध्वंसम् । ४ आचारः कृतिः । विषयत्वं च विधेयतारूपं । तेन फले फलवत्त्वाभावेऽपि न व्यभिचारः । चैत्यवन्दने व्यभिचारवारणाय शिष्टेति । शिष्टत्वं च फलसाधनत्वांशे भ्रान्तिराहित्यम् । श्येनादौ व्यभिचारवारणाय अविगीतेति । तत्त्वं च इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखाननुबन्धित्वम् ।

मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते; यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्, प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वम्, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः। नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्; समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न च स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्; इष्टापत्तेः, विघ्नशङ्कया तदाचरणात्, तथैव शिष्टाचारात्। नच तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम्; सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं तु विघ्नध्वंसविशेषे कारणं, विघ्नध्वंसविशेषे च विनायकस्तवपाठादि[1]। क्वचिच्च[2] विघ्नात्यन्ताभाव एव समाप्तिसाधनम्; प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः। संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय,। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथा हि—यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि[3]। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्; अप्रयोजकत्वात्[4]। मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवानुकूलस्तर्कः। 'द्यावाभूमी जनयन्देव एकः' (श्वेता. ३।३) 'विश्वस्य कर्ता भुवनस्य गोप्ता' (मुण्ड. १।१।१) इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥

पदार्थान्विभजते—

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥

द्रव्यं गुण इति। अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तम्, तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकाना-

---

टिप्प०—१ पाठस्य कण्ठताल्वाद्यभिघातरूपस्य ज्ञानविशेषरूपमङ्गलाद्भेदः। २ ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्न स्यात्, अतः समाप्तिसाधन विघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या, तच्च न संभवति स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्तिसाधनत्वाभावादिति शङ्कां निरस्यति—तथा क्वचिदिति। च विघ्नध्वंसात्यन्ताभावयोः संसर्गाभावत्वेनानुगमान्न व्यभिचार इति भावः। अथ समाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथं कार्यकारणभाव इति चेदुच्यते—स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासंबन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति विशेषणतासंसर्गेण विघ्नसंसर्गाभावत्वेन हेतुत्वम्। ३ क्षितिः सकर्तृका, कार्यत्वादित्यत्र क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे घटादावंशतः सिद्धसाधनम्। पक्षतावच्छेदकावच्छेदेन तथात्वे तु परमाणौ बाध इत्यतोऽङ्कुरत्वस्य पक्षतावच्छेदकत्वानुधावनम्। तत्र च सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे काप्यङ्कुरे जीवीयकृतिसाध्यत्वाभावेन नांशतः सिद्धसाधनं न वा बाधो नित्याङ्कुरस्याभावादिति भावः। ४ व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वादित्यर्थः।

मप्यविरुद्धाः प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वात्। तथा हि—मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति; सामान्येऽपि सत्त्वात्। यथा गोत्वं नित्यं तथाऽश्वत्वमपीति सादृश्यप्रतीतेः। नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेत्,—मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते; अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्; उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्। सादृश्यमपि न पदार्थान्तरं, किंतु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

द्रव्याणि विभजते—

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः।**
**द्रव्याणि**

क्षित्यविति। क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुत् वायुः, व्योम आकाशः, कालः समयः, दिक् आशा, देही आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः। ननु द्रव्यत्वजातौ किं मानम्?। नहि तत्र प्रत्यक्षं प्रमाणं; घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेत्,—न; कार्यसमवायिकारणतावच्छेदकतया

---

टिप्प०–१ कणादसूत्रभाष्ये। २ शक्तेः क्लृप्तेष्वनन्तर्भावसाधकानुमानप्रयोगश्चेत्थम्। शक्तिर्न द्रव्यात्मिका; गुणादिवृत्तित्वात्। अत एव न गुणात्मिका कर्मात्मिका वा। न सामान्याद्यन्यतमरूपा; उत्पत्तिमत्त्वे सति विनाशित्वात्। ३ अत्रानुमानप्रयोगस्तु–'सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्' इति। अत्र सामान्यत्वे व्यभिचारवारणाय विशेषणम्, रूपादौ व्यभिचारवारणाय विशेष्यम्। नच प्रमेयत्वे व्यभिचारः; व्यतिरेकित्वे सतीत्यस्य विवक्षणीयत्वात्। ४ उत्तेजकत्वं च प्रतिबन्धकसमानकालीनकार्योर्जकत्वम्। कारणीभूताभावप्रतियोगितावच्छेदकीभूताभावप्रतियोगित्वमिति निष्कर्षः। ५ उत्तेजकाभावविशिष्टो यो मणिस्तदभाव इत्यर्थः। विशिष्टाभावस्त्रिविधः–विशेषणाभावप्रयुक्तः विशेष्याभावप्रयुक्तः, तदुभयप्रयुक्तश्चेति। प्रकृते तूत्तेजकसत्त्वेनोत्तेजकाभावरूपविशेषणासत्त्वादयं विशिष्टाभावो विशेषणाभावप्रयुक्त इति बोध्यम्। ६ समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतयेत्यर्थः। कार्यतावच्छेदकीभूतं कार्यत्वं च प्रागभावप्रतियोगित्वविशिष्टसत्त्वं ग्राह्यम्। तेन प्रागभावप्रतियोगित्वस्य ध्वंससाधारण्यात्, ध्वंसस्य च द्रव्यत्वावच्छिन्ननिरूपितकार्यत्वाभावादतिप्रसक्तत्वेन नोक्तकार्यतावच्छेदकत्वमन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वादिति परास्तम्। अत्रानुमानप्रयोगश्चेत्थम्—कार्यत्वावच्छिन्नकार्यतानिरूपितकारणता अवच्छिन्नत्वसंबन्धेन किंचिद्धर्मवती, कारणतात्वात् घटनिरूपितदण्डत्वावच्छिन्नकारणतावदिति। एवमग्रेऽपि।

संयोगस्य[1] विभागस्य[2] वा समवायिकारणतावच्छेदकतया तत्सिद्धेरिति[3]। ननु दशमं द्रव्यं तमः कुतो नोक्तम्? तद्धि प्रत्यक्षेण गृह्यते, तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं, तच्च गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वान्न जलादिकं, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेत्,—न; आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा। कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव। तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात्। स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते॥

गुणान्विभजते—

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

अथ गुणा इति एते। गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः चशब्देन च दर्शिताः। तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते॥ ३–५ ॥

कर्माणि विभजते—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

उत्क्षेपणमिति। कर्मत्वजातिस्तु प्रत्यक्षसिद्धा। एवमुत्क्षेपणत्वादिकमपि॥ ६॥

ननु भ्रमणादिकमपि पृथक्कर्म पञ्चकर्माधिकतया कुतो नोक्तमत आह—

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

भ्रमणमित्यादि॥ ७॥

---

टिप्प०-१ निरुक्तकार्यत्वस्य गौरवात् कालिकसंबन्धेन घटत्वादिकमादाय विनिगमनाविरहाच्चाह—**संयोगस्येति**। अनुमानप्रयोगश्च पूर्ववदेव। संयोगत्वावच्छिन्नकार्यतानिरूपितकारणतेति विशेषः। २ विभुद्वयसंयोगाङ्गीकर्तृमते संयोगत्वमप्यतिप्रसक्तं; विभुद्वयसंयोगस्य नित्यतया कार्यत्वाभावात्। अतस्तन्मतसाधारण्येनाह—**विभागस्येति**। ३ द्रव्यत्वजातिसिद्धेरित्यर्थः। दर्शितानुमानेन किञ्चिद्धर्मसिद्धिः, स च धर्मो द्रव्यत्वं, तस्य च वक्ष्यमाणबाधकाभावाज्जातित्वमिति बोध्यम्। ४ द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेनेति भावः।

सामान्यं निरूपयति—

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

सामान्यमिति । तल्लक्षणं तु—नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्ति; अत उक्तं—नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ति; अत उक्तमनेकेति । नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्ति; अतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकव्यक्तिवृत्तिस्तु न जातिः । तथा चोक्तम् ( द्रव्यकिरणावल्यां )—'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥' द्रव्यादीति । परत्वमधिकदेशवृत्तित्वम्, अपरत्वमल्पदेशवृत्तित्वम्, सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

परभिन्ना च या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वं, सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वात् द्रव्यत्वस्यापरत्वं, तथा च धर्मद्वयसमावेशादुभयमविरुद्धम् ॥ ९½ ॥

---

टिप्प०-१ लक्षणप्रयोजनं तु इतरभेदस्य व्यवहारस्य वा सिद्धिः । २ उदयनाचार्यैः । व्यक्तेः स्वाश्रयव्यक्तेरभेदः ऐक्यमाकाशत्वादेर्जातित्वे बाधकम् । तुल्यत्वं स्वभिन्नजातिसमनियतत्वं घटत्वकलशत्वादीनां जातीनां भेदे बाधकम् । संकरः परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः, भूतत्वादेर्जातित्वे बाधकः । भूतत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य, मूर्तत्वं विहाय गगने वर्तमानस्य भूतत्वस्य च पृथिव्यादिचतुष्टये समावेशात् । नव्यास्तु सांकर्यस्य जातिबाधकत्वं न सहन्ते । अनवस्थितिः अप्रामाणिकानन्तपदार्थकल्पनयाऽविश्रान्तिर्जातेर्जातिमत्त्वे बाधिका । तथा हि—घटत्वपटत्वादिनिखिलजातिषु अनुगतस्य जातित्वस्य जातित्वाङ्गीकारे तत्रापि जातित्वमभ्युपेयमापद्येत; तस्य निखिलजातिवृत्तित्वात् तत्रापि पुनर्जातित्वमेवं जातित्वे जातित्वं तत्रापि जातित्वमित्याधाराधेयभावः कुत्राप्यवस्थितिं न लभेत । रूपहानिः स्वतोव्यावर्तकत्वरूपस्य भङ्गः विशेषाणां जातिमत्त्वे बाधकः । एकस्मिन्परमाणौ परमाण्वन्तरभेदसाधने 'अयं परमाणुः तत्परमाणुतो भिन्नः विशेषात् इत्यत्र विशेषस्य स्वतः स्वेन रूपेण यत् व्यावर्तकत्वं तत्परमाणुभेदानुमितिरूपव्यावृत्तिजनकत्वं तादृशानुमितिहेतुत्वमिति यावत् तस्य हानिः स्यात् । तत्र ( विशेषे ) जातिस्वीकारे तयैव हेतुत्वावश्यकत्वात् । सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वनियमात् । नच सामान्यरूपेण विशेषाणां भेदसाधकत्वं संभवति, व्यभिचारात् । असंबन्धः प्रतियोगित्वजात्यतिरिक्तप्रतियोगितानिरूपितानुयोगित्वान्यतरसंबन्धेन समवायाभावः । यत्र जात्यतिरिक्तः पदार्थः समवायेन विद्यते तत् तादृशानुयोगितासंबन्धेन समवायवत् । यत्समवायेन विद्यते तत् प्रतियोगितासंबन्धेन समवायवत् । तदन्यतरद्यन्न न तत्र जातिरित्यर्थः । अयं समवायाभावयोर्जातिमत्त्वे बाधक इति ।

विशेषं निरूपयति—

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

अन्त्य इति। अन्ते अवसाने वर्तत इत्यन्त्यः। यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः। परमाणूनां परस्परभेदको विशेष एव, स तु स्वत एव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ १० ॥

समवायं दर्शयति—

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।**
**तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

घटादीनामिति। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः। समवायत्वं=नित्यसंबन्धत्वम्। तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया, विशिष्टबुद्धित्वात्, दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानम्। एतेन संयोगादिबाधात्समवायसिद्धिः। नच स्वरूपसंबन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः। नच समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः; तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्। न चैवमभावस्यापि वैशिष्ट्यं संबन्धान्तरं सिध्येदिति वाच्यं; तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात्, घटाभावस्य तत्र सत्त्वात्—तस्य च नित्यत्वात्। अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात्; वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः, वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम्। इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥ ११ ॥

अभावं विभजते—

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**

---

टिप्प०—१ स्वेतरेण हेतुना जायमानायां स्वसजातीयभेदानुमितौ न विशेष्यो भवतीति भावः। साजात्यं चात्र पदार्थविभाजकोपाधिरूपेण बोध्यम्। नव्यास्तु विशेषेऽतिरिक्ते मानाभावः, यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीत्याहुः। २ अयुतसिद्धयोः स्वरूपसंबन्ध इति वदतः परस्येति शेषः। ३ समवायसाधने प्रवृत्तानां नैयायिकानामिति शेषः। ४ विशिष्टबुद्धौ विशेषणज्ञानस्य संबन्धज्ञानस्य च कारणत्वादिति भावः। ५ वैशिष्ट्यस्य। ६ घटाभावस्य। ७ घटाभावस्यानित्यत्वे घटसामान्याभावस्यैकत्वादिति भावः। ८ समवायैकत्ववादिमते। ९ तत्तत्कालीनं-घटाभाववद्भूतलमिति ज्ञानकालीनमित्यर्थः। तत्तद्भूतलादिकमिति। यत्र भूतले घटाभावबुद्धिस्तत्तद्भूतलादिकमित्यर्थः। तत्तदभावानामिति। यस्य यस्याभावस्य बुद्धिस्तस्य तस्येत्यर्थः। तथा च न स्वरूपमात्रं संबन्धः, किंतु ईदृशः स्वरूपविशेष इति बोध्यम्।

प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

अभावस्त्विवति । अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्; संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते—प्रागभाव इति । संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याऽभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वं अत्यन्ताभावत्वम् । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य संबन्धाघटकतयाऽत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं श्यामघटे रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते[2], न तु तदत्यन्ताभावं; तयोर्विरोधात् । नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः । नन्वस्त्वभावानामधिकरणात्मकत्वं लाघवादिति चेत्,—न; अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं चाधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम्; अप्रत्यक्षत्वापत्तेः ॥ १२½ ॥

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥

सप्तानामिति । समानो धर्मो येषां ते सधर्माणः, तेषां भावः साधर्म्यं,—समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः, तेषां भावो वैधर्म्यं,—विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता, सा च सर्वत्रैवास्ति; ईश्वरादिविज्ञानविषयतायाः केवलान्वयित्वात्[4] । एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥

द्रव्येति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति, तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा

---

टिप्प०—१ सामयिकाभाव इत्यर्थः । समयविशेषे प्रतीयमानत्वात् । २ विषयीकरोतीत्यर्थः । ३ येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यत इति नियमादिति भावः । ४ एकजातीयसंबन्धेन सर्वत्र विद्यमानत्वादित्यर्थः ।

तथा च समवेत वृत्ति पदार्थविभाजकोपाधिमत्त्वमिति —

फलितोऽर्थः



चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितार्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसंबन्धेन संबन्धित्वं, न तु समवायवत्त्वं; सामान्यादावभावात् । सत्तावन्त इति । द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं, क्रियाशून्यत्वं च गगनादावतिव्याप्तं; तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं च तदर्थः । नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति, कर्मवदवृत्ति वा किंतु गुणत्वादिकं तथा; आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यम्=अणुपरिमाणं, कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् । तच्च न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्, ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणमाकाशादेर्बोध्यम् । तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये । तन्न; ज्ञानातिरिक्तं प्रत्येवाकारणतया आचार्यैरुक्तत्वात् ॥ १५ ॥

ननु कारणत्वं किम्, अत आह—

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥

---

टिप्प०–१ उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति नियमात् । तद्गतगुणं प्रति तस्य कारणत्वात् कारणस्य च कार्यपूर्ववृत्तित्वावश्यकत्वादिति भावः । २ साजात्यमत्र परिमाणविभाजकोपाधिरूपेण बोध्यम् । परिमाणविभाजकोपाधयश्च अणुत्वमहत्त्वदीर्घत्वह्रस्वत्वरूपाः । उत्कृष्टं चाणोरणुतरं महतो महत्तरं दीर्घस्य दीर्घतरं ह्रस्वस्य ह्रस्वतरं बोध्यम् । न चाणुजन्यस्याणुतरत्वमस्तु किं बाधकमिति वाच्यम् । तथा सति त्रुटेः (त्र्यणुकस्य) अचाक्षुषत्वप्रसङ्गः । ३ अकारणमित्यर्थः । ४ योगिप्रत्यक्षे पारिमाण्डल्यस्यापि विषयतया ज्ञानं प्रति च विषयस्य विषयत्वसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतया, पारिमाण्डल्यभिन्नानामित्ययुक्तमत आह—इदमपीति । यथा योगजधर्मेणातीतानागतविषयकं प्रत्यक्षं तथा विद्यमानविषयकमपीत्यर्थः । लौकिकप्रत्यक्ष एव विषयस्य कारणत्वमङ्गीकार्यं योगजधर्मस्त्वलौकिकसंनिकर्ष इति भावः । ५ ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन ज्ञायमानहेतोरनुमितिकरणत्वेन च पारिमाण्डल्यस्य सामान्यलक्षणाप्रत्यासत्तिजन्यज्ञाने इतरभेदानुमितौ च हेतुतया 'पारिमाण्डल्यभिन्नानाम्' इत्ययुक्तमत आह—ज्ञायमानेत्यादि ।

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥

अन्यथेति । तस्य=कारणत्वस्य ॥ १६–१७ ॥

यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं[1] द्वितीयम्, असमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं[2] स्यात्, एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्, एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं[3] देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति, तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव ॥ अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा—घटरूपं प्रति कपालरूपमसमवायिकारणम् । तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । तथा च क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवेतत्वसंबन्धेनेति फलितोऽर्थः । इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम् । आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेत्यादिना ।

येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥

---

टिप्प०–१ पटसमवायिकारणतन्तुसमवेततन्तुत्वादावतिव्याप्तिवारणाय कारणमिति । तन्तुत्वस्यान्यथासिद्धत्वेनानन्यथासिद्धनियतपूर्ववृत्तित्वाभावान्न कारणतेति भावः । २ तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति नाशङ्कनीयम् । तुरीतन्तुसंयोगनाशे पटनाशापत्तेः, असमवायिकारणनाशस्य द्रव्यनाशजनकत्वात् । नचासमवायिकारणनाशस्य द्रव्यनाशजनकत्वे मानाभाव इति वाच्यम्; द्व्यणुकनाशान्यथानुपपत्तेरेव मानत्वात् । ३ वस्तुतस्तु तुरीतन्तुसंयोगत्वावच्छिन्नप्रतियोगिताकभेदः पटासमवायिकारणलक्षणघटकतया ग्रन्थकर्तुर्नाभिप्रेतः; अपि तु तन्तुभिन्नसमवेतत्वावच्छिन्नप्रतियोगिताकभेद एव । अन्यथा हस्ततन्तुसंयोगादिभेदानां पृथग्निवेशापत्त्या भेदकूटनिवेशेन गौरवमिति ध्येयम् ।

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः; यथा—घटं प्रति दण्डत्वमिति । द्वितीयमन्यथासिद्धमाह—कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किंतु कारणमादायैवान्वयव्यतिरेकौ गृह्येते, तदन्यथासिद्धम् । यथा—दण्डरूपम् । तृतीयमाह—अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा—घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् । आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् । ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्,—पञ्चमीति गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्,—कवत्त्वादिकं विशेषपदार्थो वेति । चतुर्थमन्यथासिद्धमाह—जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः; कुलालमात्रस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह—अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम्; अनेकद्रव्यत्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यं; महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९–२० ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

---

टिप्प०–१ अन्वयः स्वाधिकरणे कार्यसत्त्वम् । व्यतिरेकः स्वानधिकरणे कार्यासत्त्वम् । अन्वयव्यतिरेकयोः स्वातन्त्र्यं स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वम् । दण्डत्वदण्डरूपयोरन्वयव्यतिरेकौ स्वभिन्नदण्डरूपकारणान्वयव्यतिरेकप्रयुक्तौ । स्वाश्रयाश्रयत्वसंबन्धेन दण्डत्वादिसत्त्वस्य दण्डसत्त्वाधीनत्वात्तयोरन्यथासिद्धत्वमिति भावः । अत्र इतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्ध्योः संग्रहेऽपि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् । २ अन्यं प्रति पूर्ववृत्तित्वघटितरूपेण यस्य यज्जनकत्वं तस्य तेन रूपेण तं प्रत्यन्यथासिद्धत्वमित्यर्थः । तेन यागस्य स्वर्गकारणत्वान्यथानुपपत्त्या कल्पितापूर्वं प्रति नान्यथासिद्धत्वम्, यागत्वेन रूपेण कारणत्वकल्पनादिति भावः ।

प्रसाद

रासभादिरिति । यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे, रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये, पञ्चमोऽन्यथासिद्ध आवश्यकः; तेनैव परेषां चरितार्थत्वात् । तथा हि—दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम्; दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः संबन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं संभवति ॥ २१–२२ ॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥

समवायीति । स्पष्टम् । गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं, नतु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि नाव्याप्तिः ॥ २३ ॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसंबन्धेन वृत्तिमत्त्वं, विशेषणतया नित्यानामपि कालादौ वृत्तेः ॥

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

क्षित्यादीनां नवानां तु द्रव्यत्वगुणयोगिता ॥ २४ ॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षित्यादीनामिति । क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं कर्मवत्त्वं वेगवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वम-

---

टिप्प०-१ स्वाश्रयदण्डसंयुक्तत्वरूपपरम्पराया इत्यर्थः । २ साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमित्याशयादाह—अथवेति । ३ सत्ताभिन्नद्रव्यत्वरूपजातिमति द्रव्येऽतिव्याप्तिवारणाय वृत्त्यन्तम् । तत्रैव सत्ताजातिमादायातिव्याप्तिवारणाय सत्ताभिन्नेति । तत्रैव द्रव्यगुणान्यतरत्वरूपधर्ममादायातिव्याप्तिवारणाय जातीति । वृत्तित्वं जातिमत्त्वं च समवायेन विवक्षितं, तेन गुणादौ द्रव्यत्वस्य कालिकेन वृत्तित्वेऽपि, द्रव्यस्य च कालिकेन गुणत्वादिमत्त्वेऽपि द्रव्ये नातिव्याप्तिः । ४ संयोगेन परमाणोरपि वृत्तेराश्रितत्वं परमाणावतिव्याप्तमिति तु नाशङ्कनीयं, तत्संयोगस्य वृत्त्यनियामकत्वात् । पतनप्रतिबन्धकसंबंधस्यैव वृत्तिनियामकत्वात्, जन्यगुरुत्वस्यैव पतनहेतुत्वात्, परमाणौ जन्यगुरुत्वभावात्पतनासंभवेन तत्संबन्धस्य प्रतिबन्धकत्वाकल्पनादिति । ५ सर्वाधारतानियामककालिकसंबन्धातिरिक्तसंबन्धेन । तेन 'गगनं सर्वदैवास्ति' इत्यादिव्यवहारसत्त्वेऽपि न क्षतिः ।

